# रामायणम्

प्राचीनभारते कोशलः इति राज्ञा दशरथेन शासितं एकं समृद्धं राज्यम् आसीत्। सरयूनदीतटस्थस्य कोशलस्य राजधानी अयोध्या आसीत्।

तदमूल्य वरप्रसाद गृहीत्वा सन्तुष्टः राजा ज्येष्ठराज्ञी कौशल्यां अवदत्–
प्रिये कौशल्ये! एतस्य अर्धभागं स्वीकरोतु येन भवत्याः पुत्रः प्रजायते।
अनन्तरं शेषं पायसं विभज्य अन्याभ्यां पत्नीभ्यां सुमित्राकैकेयीभ्यां अयच्छत्। यथाकाले तस्य चत्वारः पुत्राः अजायन्त। कौशल्यायाः पुत्रः रामः, कैकेय्याः भरतः, सुमित्रायाः च लक्ष्मणशत्रुघ्नौ।

राजकुमाराः वेदान् अधीतवन्तः।

ते अश्वगजचालनं विदितवन्तः।

षोडशवर्षात् पूर्वं ते शस्त्रप्रयोगे निपुणाः अभवन्।

समुचिते स्थाने उपविष्टं मुनिं प्रति राजा अवदत्–

श्रृणु राजन्! राक्षसाः सर्वदा ममाश्रमे यज्ञान् बाधन्ते, यज्ञविघ्नं कुर्वन्ति, समापनकाले यज्ञवेदिकाम् मलिनां कुर्वन्ति च।

ऋषेः वचनं श्रुत्वा वज्राघातितः इव मूर्चितः राजा भूमौ अपतत्।
क्षणानन्तरं सचेतः सन् –
रामस्तु इदानीं ऊनषोडश वर्षीयः एव। तस्य युद्धपरिचयः अपि नास्ति। कथं वा सः घोरराक्षसैः सह योत्स्यते?
मम सेनां प्रेषयामि। यदि भवान् इच्छति तर्हि राक्षसान् हन्तुम् अहं स्वयमेव आगमिष्यामि। मम प्रियपुत्रं रामः त्यजतु।
एतदर्थं रामः एव। नान्यः कोऽपि।
राजन्, विस्मृतवान् वा प्रदत्ता प्रतिज्ञा। एतत्तु तवाचरणं पावनरघुकुलपरम्पराविरुध्दमेव। गच्छाम्यहमिदनीं असत्यवादिन राजन्।

रामस्य मङ्गलाय एव युद्धाभ्यासाय च मुनिः तमेव रामं एतदर्थं इच्छति । तव प्रतिज्ञां पालय रामं प्रयच्छ च ।

त्रयोऽपि अयोध्यानगरात् निर्गत्य
सरयूगङ्गासङ्गमं उल्लङ्घ्य अग्रे आगच्छन्।

राम ! पुरा एतत् स्थानं जननिबिडं आसीत्। इदानीं तु घोरराक्षस्या ताडकया पूर्णरूपेण विनाशितम् अस्ति। तां राक्षसीं हत्वा त्वं एतद्देशं त्राहि।

यथा गुरोः आज्ञा।

रामः धनुः उन्नीय टङ्कारमकरोत् यस्य प्रतिशब्देन वनम् आपूरितम् अभवत्। ताडका अपि तं टङ्कारं श्रुतवती।

तं प्रति धावन्त्या तया ताडकया रामस्योपरि क्षिप्तेभ्यः पाषाणवर्षेभ्यः सः सुलभतया निवृत्तवान्।

तदा अदृश्या भूत्वा सा तान् प्रति पुनः पाषाणवर्षम् अकरोत्।

रामः तां प्रति शरवर्षं प्रेषितवान् ।
तथापि भयङ्करी ताटका अग्रे आगच्छन्ती आसीत् ।
GRRRR
तदा रामबाणं तस्याः हृदयं व्यदारयत् ।
मृता सा भूमौ अपतत् ।
रामस्य शौर्येण प्रसन्नः विश्वामित्रः रामं दिव्यशास्त्राणां रहस्यं उपदिष्टवान् ।
अनन्तरं ततः प्रस्थिताः ते अचिरदेव विश्वामित्राश्रमं प्राप्नुवन्तः ।
तत्र तापसाः तेषां स्वागतं कृतवन्तः ।
महर्षे ! विना विलम्बेन यागः आरभ्यताम् । साफल्यं प्राप्नोतु च ।

यज्ञं प्रारभत: । यागरक्षार्थं रामलक्ष्मणौ शालायां अतिष्ठताम् ।
दिनानि अतीतानि । षष्ठमे दिने...
पश्य लक्ष्मण ! राक्षसाः ।
यथा वायुः मेघान् विकीरति तथा आवां तान् राक्षसान् नाशयिष्यावः ।
रामस्य बाणः लक्ष्यं प्राप्नोत् ।
राक्षसः मारीचः बाणेन तथा ताडितः ।
यस्य आघातेन सः शतक्रोशमिते दूरे समुद्रे क्षिप्तः ।
रामलक्ष्मणौ सुबाहुं अन्यान् राक्षसान् च नाशितवन्तौ ।
तावता यज्ञः अपि सम्पन्नः जातः ।
पुण्यात्मन् ! एतत् मम दायित्वमेव ।
तव प्रवृत्त्या यज्ञः सफलः अभवत् अहं अभीष्टसिद्धिं प्राप्तवान् च । राम, त्वं मम सिद्धाश्रमस्य नाम सार्थकं कृतवान् ।

तदा ऋत्विजः तापसः रामं अवदन्
राजकुमार! वयं मिथिलपुरिं गच्छामः यत्र जनकमहाराजः एकं यज्ञं करिष्यति। भवानापि अस्माभिः सह आगच्छतु।
सन्तोषेण।
विश्वामित्रेण अन्यै तापसैः सह रामलक्ष्मणौ प्रस्थितौ। मार्गे तापसाः शिवस्य प्रसिद्धधनुषः विषये रामं उक्तवान् यदिदानिं जनकस्य समीपे आसीत्।
आवां मिथिलायां शिवस्य धनुः द्रष्टुं शकुवः
अवश्यं यदि जनकः अङ्गीकरोति तर्हि।
मिथिलायां विश्वामित्रं तापसान् च विधिवत् सम्पूज्य यज्ञशालां आनेतुं महाराजः जनकः तेषां समीपं गच्छति। तदा रामं अनुजं च दृष्ट्वा ...
सूर्यचन्द्रौ इव द्योतयन्तौ एतौ राजकुमारौ कौ?
एतौ दशरथपुत्रौ।
परेद्युः विश्वामित्रः रजकुमारौ च याजशालायां जनकं दृष्टवन्तः ।
महाराज! कुमारौ शिवधनुः द्रष्टुकामौ स्तः।
महर्षे! एतं शिवचापं उध्दर्तुं तथा चापे गुणं आरोपयितुं बहवः महाशूरः राजानः असमर्थाः आसन्। यदि रामः एवं करोति चेत् मम पुत्र्या सीतया सह तस्य विवाहः भविष्यति।
सीता आसीत् जनकस्य पालितपुत्री। यागभूमिं कर्षता तेन जनकेन सीतामुखात् प्राप्ता सीता।

जनकस्य आज्ञां अनुसृत्य पञ्चसहस्र संख्यकाः बलिनः चापवाहकाः अष्टचक्रैः युक्तायां पेटिकायां स्थापितं शैवचापं अचिरादेव नगरात् आनीतवन्तः।
महर्षे, एषः सः शैवचापः। कामं पश्यतां राजकुमारौ
रामः पेटिकां उद्घाट्य अनायासेन चापं गृहीतवान्।
यदा रामः चापे गुणं आरोपयति –

चापः महाशब्देन द्विधा भग्नः अभवत् । तेन शब्देन भूलोकम् अकम्पयत।
जनकः क्षणं यावत् स्तब्धः इव अतिष्ठत्। अनन्तरं विश्वामित्रम् अवदत् ।
अहो! मम सौभाग्यं येन एतादृशं पराक्रमं मया दृष्टम्। पराक्रमी रामः पुत्र्याः सीतायाः भर्ता भविष्यति, सा मम वंशस्य कीर्तिं वर्धिष्यति च। अनुज्ञां देहि , दशरथाय एतां शुभवार्तां प्रेषयामि।
यथाकालं दशरथः विवाहार्थं मिथिलां आगच्छति।
राम। इतः परं मम पुत्री गुणवती सीता तव सहधर्मिणी भविष्यति । छायेव सा त्वां सर्वत्र अनुगमिष्यति च। युवां सुखिनौ भवतम्।

लक्ष्मणः सीतायाः अनुजाम् ऊर्मिलां परिणीतवन्तौ । भरतशत्रुघ्नौ जनकस्य भ्रातुः राज्ञः कुशध्वजस्य पुत्र्यौ माण्डवीं श्रुतकीर्तिं च परिणेतवन्तौ। विवाहे अग्निपरिक्रमणवेलायाम् आकाशात् पुष्पवृष्टिः जाता।
विवाहानन्तर कुमारान् वधून् च अशीर्वाद कृत्वा विश्वामित्रः ...
तपः आचरितुं हिमवन्तं गतवान्
अथ दशरथः पुत्रैः वधूभिश्च सह स्वराजधानीं प्रस्थितः। मार्गे क्षत्रियकुलवैरिः ऋषिः परशुरामः तान् निरुध्य अवदत् –
राम, तव पराक्रमं श्रुत्वा त्वया सह युद्धं कर्तुम् आगतोऽहम्।
तदा भयेन कम्पमानः दशरथः दैन्येन अयाचत
मम पुत्रः बालकः एव, कृपया तं त्यज।
दशरथस्य याचनाम् अनादृत्य परशुरामः स्वचापम् उद्धृतवान्।
गृह्णातु एतं वैष्णवचापम्, यदि अस्मिन् चापे गुणमारोपयितुं समर्थोऽसि तर्हि त्वं मया आदरणीयः इति मन्ये।

रामः परशुरामस्य हस्तात् चापं गृहीत्वा तस्मिन् गुणमारोप्य शरं च संस्थाप्य शरप्रयोगाय सिद्धः अतिष्ठत्।
इदानीमहं जानामि भवान् भगवान् विष्णुः एव, नान्यः इति मम पूर्णविश्वासः अभवत्।

परशुरामः स्वधाम महेन्द्राचलं प्रत्यगच्छत्। अनन्तरं दशरथः, अन्ये च अयोध्यां प्रति यात्रां अन्ववर्तन्त।

अयोध्यावासिनः महता हर्षोल्लासेन राजकुमारान्, वधून् च स्वागत कृतवन्तः।
किचित् कालानन्तरं भरतः मातामहस्य सन्दर्शनार्थं केकयराज्यं गतवान्।

रामः पितरं दशरथं सम्यक् पर्यपालयत्।
सः माम् प्रेम्णा श्रद्धया च पालयति।

द्वादशसंवत्सराः अतीताः।
इदानीम् अहं वृद्धः अभवम्। सर्वे रामम् अत्यन्तं स्निह्यन्ति, तस्य राज्याभिषेकं करिष्यामि।

दशरथः सभायाम् उक्तवान्
अहं पितॄणां परम्परानुसारम् एतत् महाराज्यं पालयितवान् अस्मि। इदानीं अहं वृद्धत्वं प्राप्तवान् अस्मि।
भवद्भिः अनुमतिना अहं मम ज्येष्ठपुत्रं नरोत्तमं रामं युवराजः इति उद्घोषयिष्यामि ।
वयम् अनुमन्याम
आम् । रामः क्षमाया भूमिरिव, धियाम् बृहस्पतिरिव , शौर्ये इन्द्रः इव ।
रामः एव सम्पन्नः !
अनन्तरं दशरथः रामम् आहूतवान् ।
पुत्र, उन्नतां युवराजपदवीं स्वीकरोतु । प्रजाणाम् सुखार्थं राज्यं परिपालयतु ।
धन्यवादः पितः ।

दशरथस्य तृतीया पत्नी कैकेयी एषां वार्तां तस्याः सेविकायाः मन्थरायाः श्रुतवती ।
मम रामस्य पट्टाभिषेकं भविष्यति । अहं सुखी अस्मि । शुभवार्ता आनयार्थं एषां मालां पारितोषिकरूपे स्वीकरोतु ।
किन्तु मन्थरा मालां अक्षिपत् ।
एतत् शुभप्रसङ्गः न! रामः राजा भविष्यति, परन्तु भरथः - किमपि न ।
मन्थरे, किन्तु, यावत् भरतः मम प्रियः तावदेव रामः अपि ।
मुढे राज्ञे, भरतस्य अनुपस्थित्यां रामस्य पट्टाभिषेकं ते किंमर्थं कुर्वन्ति इति त्वं न जानीहि वा?
यदा रामः राजा भविष्यति, तदा सः भरतं बहिष्करिष्यति अथवा तं मारयिष्यति ।
न, तथा न करिष्यति । मम रामम् अहं सम्यक् जानामि ।
किन्तु मन्थरा अन्ववर्तत ।
कौशल्या राजमाता भविष्यति । त्वं च तस्याः इच्छाः अनुसरेत् ।

मन्थरायाः वाचां अर्थितः प्रभावः अभवत् । यतः कैकेयी कौशल्यां ऐर्ष्यत् ।
तव पुत्रार्थं स्वहिताय च रामं उत्क्षिप्तुं काञ्चन योजनां कुर्यात् ।
प्रायः त्वया उक्तं सत्यम् ।
भरतस्य पट्टाभिषेकं कर्तुं राजानं वादेन प्रवर्तयतु ।
तु कथम् ? राजा मम वाचं शृणोति वा?
त्वं राज्ञा दत्तौ वरौ विस्मृतवती वा?
आम् । इदानीम् अहं तौ प्रयोगं कुर्याम् ।
आगामिप्रभाते राजसभायां साधवः रामस्य पट्टाभिषेकं वीक्षितुं सम्मिलितवन्तः ।
उत्सवस्य सज्जता पूर्णा। किन्तु महाराजः कुत्रास्ति?
सर्वं कुशलम् स्यात्।

आर्य सुमन्त्र, वयं महाराजाय प्रतीक्षां कुर्वन्तः स्म। विलम्बः किमर्थम्।
क्षम्यताम्। इदानीं किमपि वक्तुं मम समयः नास्ति। अहं रामं द्रष्टुं तस्य गृहं गच्छन् अस्मि।
रामस्य गृहं प्राप्ते सुमन्त्रे –
राजकुमार, महाराजः भवन्तं द्रष्टुम् इच्छति, यः इदानीं राज्ञ्याः कैकेय्याः प्रासादे अस्ति।
तर्हि अहं शीघ्रमेव गमिष्यामि
अनन्तरं सीतां प्रति –
कैकेयीमाता प्रायः पित्रा सह अभिषेकोत्सवविषये चर्चां कुर्वती स्यात्। मया शीघ्रं गन्तव्यं तत्र।
अभिषेकोत्सवार्थं समलङ्कृतासु वीथिषु रामः रथेण कैकेयीगृहं प्रति प्रस्थितवान्। मार्गे पौराः उच्चैःतस्य जयघोषं कृतवन्तः।

यदा रामः कैकेयीगृहं प्राविशत्–
पिता उद्विग्नः इव भासते। मां दृष्ट्वापि मुखे न किञ्चित् सन्तोषः? एतत् किमर्थम्?
सः कैकेयीम् अपृच्छत्।
मातः, किमपि अनिष्टं कृतं वा मया? एवं चेत् पिता मां क्षन्तुमर्हति। कृपया तं प्रार्थयतु।
हे राम, त्वं कैकेय्याः यथार्थ स्वरूपं न जानासि।
तव पिता पूर्वं मह्यं वरद्वयं दत्तवान् यदिदानीं त्वदधीनमस्ति। तेन तव अनिष्टं भवति इति राजा दुःखितः, त्वां वक्तुं लज्जते च।
किमेवं भाषसे? यदि पिता इच्छति तर्हि अहं निस्सङ्कोचम् अग्निं प्रविशामि। वदतु किं तद्वरद्वयम्? तस्य पालने अहं प्रतिज्ञां करोमि, सत्यम्।

पुरा एकवारं देवासुरयुद्धे असुरान् योद्धुं गचछन्तं तव पितरम् अहम् अन्वगच्छम्।


पराक्रमिणा तेन बहवः असुराः हताः।


तथापि एकेन शत्रुबाणेन घातितः सः व्रणितः सन् रथे अपतत्। तदा अहमेव रथं चालयित्वा यध्यमानान् असुरान् अतिक्रम्य राजानं कथञ्चित् सुरक्षितं राजधानीम् अनयम्।


तेन सन्तुष्टः राजा अवदत् –
कैकेयि, त्वयैव रक्षितोऽहम्। वरद्वयं वृणीष्व।
प्रभो! त्वयि एव तिष्ठतु तद्वरद्वयम्। यदा मम अवसरः भविष्यति, पृच्छामि, तदा देहि मे


पूर्ववृतान्तं समाप्य कैकेयी अवदत्
इदानीम् मम अवसरः आगतः। यदि त्वं पिता च सत्यवादिनौ, तर्हि त्वं मम वचनं श्रृणु।

भरतः युवराजः भवेत्, त्वं च चतुर्दशवर्षपर्यन्तं वनवासं कुर्यात् इयस्ति मम इच्छा।

एतत् श्रुत्वा दशरथः इतोऽपि शोकाकुलः अभवत्।

राम!

किन्तु रामे कोऽपि उद्वेगः न दृष्टः।
सत्यपाशेन बध्दस्य पितुर्हितम् अनुसृत्य अहं अहं सत्वरं वनं गच्छामि।
राम।

किन्तु पिता मां प्रेम्णा किमपि न भाषते? तस्य अश्रुस्रावः मां भृशं पीडयति।

वनवासार्थं गच्छ इति त्वां वक्तुं राजा लज्जते। तथापि तव प्रस्थान पर्यन्तं सः न स्नानभोजनादिकं न करोत्येव।

कैकेयीवचनं श्रुत्वा दशरथः उत्थाय –
भो! कैकेयि, त्वां धिक्!
तात!

शोकसंविग्नः सः मूर्छितः सन् अधः अपतत्।
पितः!
तदा रामः कैकेयीं प्रति –
राज्ञा प्रदत्तेन वरद्वयेन विनापि भवति मां आज्ञापयितुम् अर्हति एव, अहं सन्तोषेण वनं गमिष्यामि च। किमर्थं एवं पितरं दुःखेन अपीडयत्?
ततः निर्गच्छन् रामः सभातले वेदिकायां समाहृतान् अभिषेक सम्भारान् दृष्ट्वा प्रार्थितवान् ।
एतानि सम्भाराणि भरतस्य अभिषेकाय भवेयुः। देवाः तं रक्षन्तु ।
तावति रामाभिषेकार्थं समवेताः गण्याः श्रेष्ठाश्च कैकेय्याः अपेक्षां रामस्य निर्णयञ्च ज्ञातवन्तः।
राजपदवीत्यागेन रामे न कोऽपि खेदः दृश्यते।
सः गच्छति योगी इव।

वनवासाय अनुज्ञां प्राप्तुं रामः मातुः समीपं गतवान्।

वत्स! अहम् एतद् सोढुं न शक्नोमि। हा! पुत्रप्राप्तिः, अनन्तरं पुत्रवियोगः। अनपत्यात् दुःखतरः खलु पुत्रवियोगः?

साश्रुनयनां कौसल्यां दृष्ट्वा लक्ष्मणोऽपि दुःखाकुलः अभवत्।

वृद्धाप्ये अस्माकं पिता नष्टबुद्धिः जातः इति भासते, अन्यथा कथं रामं प्रति एतादृशी अन्यायवृत्तिः? रामाय राज्यं तु न, अपि च बहुकालपर्यन्तं वनवासंच!

अनन्तरं रामं प्रति –

ज्येष्ठपुत्रस्य भवतः अधिकारं निराकृत्य भरताय राज्यप्रदानं सर्वथा अनुचितमेव।

मास्तु मातः, पिता तु इदानीम् अतीवास्वस्थः। यदि भवती तं त्यजति तर्हि सः मरणं प्राप्स्यति। तस्य शुश्रूषां कृत्वा अत्रैव तिष्ठतु । गमनाय मह्यम् आशीर्वादम् अनुज्ञां च ददातु।
रामस्य दृढनिश्चयं ज्ञात्वा तस्मात् निर्वर्तनं व्यर्थप्रयत्नं मत्वा सा तं साश्रुतैः आशीर्वादं करोति।
गच्छ पुत्र!
तस्य ललाटे चन्दनं लेपयित्वा सा प्रार्थितवती –
शैलसरित्सागरान्तरिक्षादि देवताः त्वां वने रक्षेयुः।
अनन्तरं रामः सीतासमीपं गतवान्।
भवता विना अहम् अत्र न वसामि, भवन्तं वनम् अनुगमिष्यामि।
सीते दुष्टमृगसंकुलं वनं कोमलतरुणीभ्यः वासाय नोचितम्। इतः पूर्वं भवत्या प्रासादभोजनशय्यादिसुखमेव अनुभूतम्। अतः अत्रैव राजभवने स्थीयताम्।

भवता सह मम वनं स्वर्गसदृशं भविष्यति, भवता विना राजगृहमपि नरकमिव। मां विहाय वा गच्छतु।
मया तव मनः ज्ञातम्, अतः त्वां मया सह नेष्यामि।
तदा लक्ष्मणः रामं प्रति –
अहमपि भवता साकम् आगच्छामि। भवन्तं त्यक्त्वा अन्यत् किमपि न इच्छामि अहम्. अमृतत्वंच।
उत्तमं भ्रातः। तव सन्निधिना मम आश्वासः भविष्यति।
रामः स्वधनं सर्वं द्विजेभ्यः दत्वा ...
दशरथस्य प्रासादं प्रति प्रस्थितवान्। अवं पद्भ्यां गच्छन्तं प्रियराजकुमारं प्रजाः साश्रुनेत्रैः वीक्षितवन्तः।
पूर्वं चतुरंगसेना रामम् अनुसरति स्म। अद्य तु केवलं सीतालक्ष्मणौ।
राजकुमारं वनं प्रेषयितुम् एव अस्माभिः नगरं अलंकृतं वा?

रामः गुणवान्, दयालुः, विद्वान्, सत्यसन्धः, वशी च ...

कथं वा राजा एतादृशं प्रियपुत्रं वनं प्रेषयति?

वयमपि गृहादि सर्वं त्यक्त्वा रामम् अनुगच्छाम।

आम्। गच्छाम।

दशरथः प्रबुध्य उक्तवान् –
कैकेय्या वंचितोऽहम्। मा गच्छ वनं, मां निगृह्य राज्यं गृहाण, शासय च
मास्तु पितः, भवान् इतोऽपि बहुवर्षं राज्ये सुखेन जीवेत् इत्यस्ति मम प्रार्थना। चतुर्दशवर्षानन्तरं भवतः सेवां कर्तुं अहं प्रत्यागमिष्यामि।
अधुना सीतालक्ष्मणाभ्यां सह वनं गन्तुं अनुज्ञां ददातु।
एवं तर्हि, मम धनं पौरान् च त्वया सह वनं नय। वनं, यत्र त्वं वससि तदेव भवेत् अस्माकं
न न।
हे राजन्, धनेन पौरैश्च विहीनं राज्यं भरतः न स्वीकरोति।
तात, वने धनस्य किं प्रयोजनम्? तत्र वृक्षमेघनिर्झरादि आवश्यकं धनं खलु।

अहं सन्यासजीवनं स्वीकरोमि।
वल्कलानि मह्यं दीयन्ताम्।
सर्वे स्तब्धाः अभवन ।
मास्तु, राम।
कथं वयं वल्कलधारिणं
राजकुमारं द्रष्टुं शक्नुम ।
तदा कैकेयी स्वयं रामाय वल्कलानि आनीतवती।
स्वीकुरु, धर।
रामलक्ष्मणौ वल्कलानि धृतवन्तौ
संयसिन्यः कथं
वल्कलानि धरन्ति ?
दर्शयामि।

तन्मध्ये, वसिष्ठः अवदत्
सीता निष्कारणं वनं गछति । स्वेच्छया गछन्ती सा सुवासान् आभरणानि च एव धरेत् ।
दशरथोपि वसिष्ठवचनम् अङ्गीकृतवान्। सीता ज्येष्ठानाम् अभिप्राय अंगीकृत्य दशरथेन दत्तानि आभरणानि स्वीकृतवती।
रामः दशरथं, राज्ञीः च नमस्कृत्य सीतालक्ष्मणाभ्यां सह राजभवनात् निर्गतवान्। ते राज्यसीमापर्यन्तं गन्तुं रथम् अरूढवन्तः।
राम!
दुःखार्ताः जनाः रथं अनुधवितवन्तः। निःसहायः वृद्धः राजा तान् पश्यन् तत्रैव अतिष्ठत् ।
सारथि, रथं मन्दं चालय, तावत् वयं रामं पश्येम।
प्रतिगम्यताम्। यदि ममोपरि युष्माकं प्रेम सत्यं, तर्हि तावत् प्रेमादरं भरते अपि दधत ।
इतोऽपि किंचित् दूरं भवन्तं अनुगच्छेम।

घनारण्ये यात्रां कुर्वन्तः ते प्रयागं प्राप्तवन्तः । तत्र गंगायमुनयोः संगमस्थाने तेषां ऋषेः भरद्वाजस्य भारद्वाजमुनेः संदर्शनम् अभवत् ।
महर्षे, अस्माकं वासार्थं एकं निर्जनं स्थानं सूचयतु यत्र वयं सुखेन वसेम ।
वत्स, यमुनापारे चित्रकूटपर्वतः अस्ति। फलपुष्पनिर्झरयुक्तं तत् स्थलं भवतां वसाय उत्तमस्थानम् ।
चित्रकूटं प्राप्य मन्दाकिनीतीरे ते एकं एकां कुटीरं कृतवन्तः।
एकदा –
पक्षिणः भीताः भान्ति। आकाशः रजसावृतः दृश्यते, किमर्थं । लक्ष्मण, पश्य ।
लक्ष्मणः एकं वृक्षम् आरुह्य दूरे अपश्यत्।
राम, सावधानम्। सिंहासनं प्राप्य भरतः ससैन्यः अस्माकं प्राणान् हर्तुम् आगच्छति।
पुण्यशिलः भरतः? तस्य विषये तव अभिप्रायः असाधुः। इदानीमेव द्रक्ष्यसि।

अचिरेण –
राम
भरत! शत्रुघ्न, त्वंच अत्र !
धिक् मां, मया सहसा कृतं निर्णयञ्च! रामं प्रति भारतस्यापि प्रीतिः महती, यथा मम ।
भरत। किमर्थं त्वमपि वल्कलं धरसि? अयोध्यायां का वार्ता? पिता कुशलः खलु?
हे राम, भवतः वियोगम् असहमानः पिता, भवद्दर्शनमेव इच्छन्, भवन्तमेव स्मरन्, भवन्नाममेव उच्चरन् ....।
राम, राम, राम,
मातामहस्य गृहे मयि सति सः मृत्युं प्राप्तवान्।
हा पितः।
भरत, वनवासानन्तरम् अयोध्यां प्रत्यागन्तुम् नितरां ऐच्छम्। किन्तु इदानीं पितरि मृते तादृशी इच्छा नास्ति।

रामः जलेन पितृतर्पणम् अकरोत्।
राजन् ... अद्य दत्तेन उदकेन पितृलोके भवान् सर्वदा संतृप्तो भवतु ...
अथ तत्रागतैः सुमन्त्रवसिष्ठादिभिः ज्येष्ठैः समाश्वासितः रामः भरतं प्रति –
भवान् मम प्रश्नस्य उत्तरं न दत्तवान्। किमर्थं एषः सन्यासवेशः?
राम, योग्ये उत्तराधिकारिणि वने सति, कथम् अहं राजकीयवस्त्राणि धरामि?
ततः भरतः तानि वस्त्राणि पादुके च रामाय समर्पितवान् ।
कृपया एतानि स्वीकृत्य अयोध्यां प्रत्यागच्छतु ।
न, भरत । एतत् न सम्भवम् ।
किमर्थं राम? सिंहासनारोहणं ज्येष्ठपुत्रस्य एव धर्मः ननु?
भरत, कैकेय्यै दत्तस्य पितृवचनस्य पालनमेव अस्माकं धर्मः ।

तदा भरतः ज्येष्ठान् प्रार्थितवान् –
यदि पितृवचनपालनाय केनचित् पुत्रेण वने चतुर्दशवर्षाणि यापितव्यानि तर्हि अहमेव वने वसामि न तु रामः ।

किन्तु रामः नाङ्गीकृतवान् ।
समस्या अत्र स्पष्टम् – वरद्वयेना त्वया राजपालनं मया चतुर्दशवर्षपर्यन्तं वनवासश्च।

भरतः रामस्य निर्णयं स्वीकृतवान् ।
तर्हि भवत्पक्षतः एव अहं राजपालनं करिष्यामि । भवतः प्रभुत्वं दर्शयितुम् एते पादुके अहम् सिहासने स्थापयिष्यामि । भवत्सदृशम् अहमपि फलमूलैः जीवामि ।

रामः भरतेन अर्पिते पादुके आधरत् ।

क्षणानन्तर ते उत्सृत्य भरताय दत्तवान् । भरतः आदरेण ते स्वीकृतवान्

ततः सः दुःखेन प्रस्थितवान् ।
राम, अहम् अभिलाषेण तत् सुदिनं प्रतीक्षे यदा भवान् वनवासानन्तरम् अयोध्यां प्रत्यागमिष्यति ।
रामः भरतम् आलिङ्गत् ।
भ्रातः, तावत् राज्यं पालय। मातरं कैकेय्यीम् अपि संरक्ष। तस्यै मा कुध्य।
एवं रामेण समाश्वसितः भरतः ततः प्रस्थितवान् ।
तदनन्तरं सीतालक्ष्मणाभ्यां सह रामः दण्डकारण्यं गत्वा तत्र राक्षसं विराधम् अमारयत्।
अरण्ये बहवः महर्षयः रामं मिलितवन्तः
अत्र अस्माकं न कोऽपि रक्षकः। घोरराक्षसाः सर्वदा पीडयन्ति, कृपया तेभ्यः अस्मान् संरक्षतु।
अवश्यं करोमि।
पश्चात् सः अगस्त्यमुनिं मिलित्वा तस्मै नमस्कृतवान् ।
सः रामाय दिव्यास्त्राणि दत्तवान् ।
मुनिवर्य, भवतः अनुग्रहार्थं धन्यवादाः । मम पत्न्यनुजाभ्यां सह उषितुम् उचितं स्थलं सूचयतु ।
अष्टक्रोशमितदूरे पञ्चवटी अस्ति। तत्र सुखेन वसतु।

पञ्चवटीं गच्छन्तं रामं मार्गे कश्चन वृद्धगृध्रः उक्तवान् –
राम! अहं जटायुः, भवतः पितुः मित्रम् । अहं भवतः समीपे एव तिष्ठामि, यदि साहाय्यम् आवश्यकं तर्हि माम् आह्वयतु ।
धन्यवादाः, भवतः सामीप्येन मम बहुः अश्वासः ।
पञ्चवटीं प्राप्य –
कुटीरनिर्माणाय एतत्स्थानं अत्युत्तमम् ।
लक्ष्मणः आश्रमनिर्माणकार्यं प्रारब्धवान् ।
यदा आश्रमः सिद्धः जातः तदा लक्ष्मणः गोदावर्यां स्नात्वा देवान् नमस्कृत्य कुटीरदेहल्यां देवेभ्यः एकं कमलं समर्पितवान् ।
ततः रामम् आश्रमं दर्शयितवान् ।
अहो! बहुसुन्दर कुटीरम् एतत् । एतस्य प्रतिफलरूपेण मया एकमेव कार्यं –
तव आलिङ्गनम् ।

आश्रमः विशालः सुखकरश्च आसीत् । ते तत्र बहूनि दिनानि सुखेन यापितवन्तः । कदाचित् पञ्चवटीमार्गे गच्छन्ती शूर्पणकानाम्नी काचन राक्षसी रामम् अपश्यत् ।
अहो, अतीवसुन्दरः एषः । अहं तं परिणेतुम् इच्छामि ।
सुंदरीतरुणीरूपं धृत्वा सा रामस्य समीपं गछति ।
स्वामिन्, वाणधनुर्धरः सन् भवान् किमर्थम् अत्र राक्षसप्रदेशम् आगतः ?
अहं दशरथमहाराजस्य पुत्रः रामः । मया चतुर्दशवर्षपर्यन्तं वनवासं करणीयम् ।
अह पराक्रमिणः रावणस्य अनुजा शूर्पणखा । अस्य जनस्थानस्य शासकौ अतुल्यबलवन्तौ खरदूषणौ तु मम भ्रातरौ ।
राजकुमार, मां परिणयतु यतः आवां द्वावपि अतीवसुन्दरौ ।
रामः प्रहसन्मुखेन उक्तवान् –
अहं तु विवाहितः । मम अनुजं लक्ष्मणं पश्य । सुन्दरि, सः त्वया सर्वथा विवाहयोग्यः ।

भवती राजकुमारी, अहं तु रामस्य दासः । राजकुमारी दासं परिणेतुं कथं वा योग्या भवति?
न
कोपेन, शूर्पणखा रामं प्रति –
भवतः कुरूपपत्न्याः कारणात् मां निराकरोति वा?
अहं तां मारयामि चेत् मां परिणयति वा?
सा सीतां प्रति वेगेन अगच्छत्
लक्ष्मण, तां रुणद्धु
लक्ष्मणः उल्लङ्घ्य शूर्पणखायाः नासिकां कर्णौ च अखण्डयत् । सा निजस्वरूपं प्रतिलभ्य ततः अपलायत।

अचिरेण, शूर्पणखा खरदूषणाभ्यां चतुर्दशसहस्रराक्षसैः च सह पञ्चवटीं पुनरागतवती ।
लक्ष्मण, सीतां शरणाय गुहां नय । राक्षसान् अहं योत्स्यामि ।
तत्क्षणं राक्षसाः रामं परिवेष्टितवन्तः ।
एकाकी रामः तान् सर्वान् मारितवान् ।
..अकंपनं विहाय । सः कथञ्चित् दक्षिणसमुद्रं प्रति पलायितवान् ।

अकम्पनः राक्षसाधिपतिना रावणेन शासितं लङ्कां प्राप्तवान् ।
महाराज, भवतः शूरभ्रातरौ खरदूषणौ अयोध्याराजकुमारेण रामेण हतौ ।
कथम् एतत्! केवल सामान्यमानुषेण मम सहोदरौ हतौ!
स्वनाशम् अवश्यम् आमन्त्रितं तेन । तम् अहमेव मारयामि ।
प्रभो, देवैरपि दुष्करं तस्य दमनम् ।
तस्य नाशाय एकः एव उपायः – तस्य सुंदरीपत्न्याः सीतायाः अपहरणम् । पत्न्यां तस्य प्रेमातिशयः, अतः हृदयभेदकं सीताविरहदुःखम् एव तं विनश्यति ।
अहं मारीचं मन्त्रयिष्ये ।
अनन्तरं रावणः सन्यासवृत्तिम् आचरन्तं मारीचं संदर्शितवान् ।
रावण, यः भवन्तम् एतदुपायं सीतापहरणम् उक्तवान् सः भवतः मित्ररूपी शत्रुः एव ।
तदा मारीचः पूर्वं प्रवृत्तं स्वस्य रामसमागमं स्मृतवान् ।
मृगयायां मृगान् इव रामः युद्धे राक्षसान् हन्ति, तेन सह शत्रुत्वम् तव अमङ्गलाय ।
तव उपदेशं स्वीकरोमि ।

यदा रावणः गृहं प्रत्यागतवान्, शूर्पणखा तं प्रतीक्षमाणा आसीत्।
भ्रातः, पश्य अयोध्यावासिना व्रणितां विरूपितां च तव भगिनीम्। यदि त्वं खरदूषणयोः वधस्य प्रतिकारं न करोषि, तर्हि मनुष्याः देवाः च राक्षसेभ्यः न भेष्यन्ति। त्वरया यतस्व।
रावणः पुनः मारीचस्य समीपं गत्वा सीताम् अपहर्तुं तस्य साहाय्यं प्रार्थितवान्।
राजन्, परदाराहरणात् न अन्यत् नीचं पापकृत्यम्। सीतापहरणविचारं त्यजतु।
मां निराकरोषि ? एवं तर्हि तवोपरि अवश्यं मम खड्गप्रहारः।
यथा भवान् आज्ञापयति, तथैव करोमि, अहो! विनाशकाले विपरीतबुद्धिः, हितोपदेशमपि न शृणोति।
तदा पञ्चवट्यां रामः सीतया सह पूर्ववत् सुखेन अवसत्। शूर्पणखाप्रसङ्गं तु ताभ्यां विस्मृतम्।
राम, एतत् सुन्दरं पुष्पं पश्यतु, इदानीमेव विकसितम्।
सत्यम्, ह्यः मुकुलम् आसीत्, भवत्या दर्शितं च।
तावत्, रावणमारीचौ पञ्चवटीं प्राप्तवन्तौ।
सत्यं, रूपवती एषा।
मारीच, भवता कथमपि रामलक्ष्मणौ कुटीरात् दूरम् आकर्षणीयौ।

तावत् –
पश्यतु, तत्र कश्चित् सुन्दरः मृगः।
तादृशः विचित्रमृगः न कदापि दृष्टः, पश्यतु तस्य कान्तिः । एषः न मृगः अपि तु कश्चित् राक्षसः।
लक्ष्मणस्य वचनं उपेक्षमाणा सीता अवदत् –
सः सुन्दरः ननु? भवान् त चित्रमृगं मम कृते आनयिष्यति वा ?
अवश्यं प्रिये।
लक्ष्मण, अहं तं मृगं बध्वा आनयिष्यामि। यदि सः मायारूपी राक्षसः तर्हि तं मारयिष्यामि। भवान् अत्र स्थित्वा सीतां रक्षतु।
रामः धावन्तं मृगं गृहीतुं तं अन्वगच्छन् ततः

सीता लक्ष्मणश्च बहुकालं रामं प्रतीक्षमाणौ आस्तां तथापि रामः न प्रत्यागतः ।
धावन्तं मृगम् अनुगच्छन् रामः दूरं गतः स्यात्।
रामः निश्चयेन मृगम् आनयिष्यति, जीवं वा मृतम् ।
तावति –
हे सीते, हे लक्ष्मण!
प्रभो!
शृणु, सहायार्थं रामस्य रोदनम् । लक्ष्मण, शीघ्रं गच्छ। सः अवश्यं संकटे अस्ति ।
किन्तु लक्ष्मणः अक्षोभ्यः सन् तत्रैव अतिष्ठत्।
असम्भवम्। रामः अजय्यः। कोऽपि राक्षसः रामम् अनुकृत्य एवं रोदिति, आवां वञ्चयितुम्। अहम् इतः न गच्छामि।
किन्तु सीता न अंगीकृतवती।
गच्छ लक्ष्मण गच्छ, पतिम् रामं संरक्ष ।
न, अहं भवतीम् त्यक्त्वा न गच्छामि ।

तव अवधानं केवलं मयि एव वा ? अपगते भर्तरि, मम रक्षणेन किम् ?
शृणु, रामेण विना अहं प्राणान् त्यक्ष्यामि ।
तर्हि गच्छामि । किन्तु न स्वेच्छया । रामेण सह मम प्रत्यागमनं यावत् भवत्यः अरिष्टः भवेत् ।
उत्तमम् । अचिरेण एषा एकाकिनी भविष्यति । मारीचः स्वकार्यं सम्यक कृतवान् ।

तदा रावणः भिक्षुवेशं धृत्वा सीताम् उपागच्छत् ।
भद्रे, हिंस्रमृगराक्षससंकुले अस्मिन् वने भवती एकाकिनी वसति ?
सीता तस्मै पादप्रक्षालनाय जलं दत्वा फलानि च दत्तवती।
मम भर्ता रामः मदर्थम् एकं मृगं गृहीतुं वनं गतः । सः शीघ्रं प्रत्यागमिष्यति ।
सीते, अहं राक्षसराजः रावणः। रामं त्यक्त्वा मया सह लङ्काम् आगच्छतु यत्र भवती मम महाराज्ञी भविष्यति ।
अहं रामस्य पत्नी, रामस्य एव । नराधम, मम अपहरणं ज्वलन्ताग्निरिव त्वां नाशयिष्यति ।

युद्धे अहं रामात् परः ।
स्वामिरूपेण मां स्वीकुरु ।
हे राक्षस, यः धर्मचारिणीं दूषयति, सः अमृतपीतः अपि मृत्युना गृह्यते ।
मम पराक्रमः न श्रुतः? अहं पृथिवीम् उत्थातुं शक्तः, सूर्यं छेत्तुं समर्थः, युद्धे यमम् अपि नाशयितुं सक्षमः।
सीतायाः सौन्दर्येण मोहितः, तस्याः तिरस्कारेण क्रुद्धः च रावणः स्वरूपं प्रदर्श्य सीतायाः केशान् गृहीत्वा तां कुटीरात् बहिः अपाकर्षत्।
इदानीं त्रिलोकविख्यातः अहमेव तव स्वामी।
हे राम! राम!

रावणः सीतां बलात् स्वरथम् आनीय त्वरया वायुमार्गेण लङ्कां प्रति प्रस्थितवान् ।
हे राम, हे लक्ष्मण...
तावत् वने अन्यत्र –
लक्ष्मण! अत्र किमर्थम् आगतवान्? सीता कुत्र अस्ति?
राम, भवतः रोदनं श्रुत्वा सीता आग्रहेण मां भवत्साहाय्यार्थं प्रेषितवती ।
सः न मम शब्दः । तव अनुमानं साधु यत् सः न सामान्यमृगः अपि तु मृगरूपी राक्षसः मारीचः आसीत् ।
वायुवेगं धावन्तं मृगं अनुगम्य अहं तम् कथंचित् हतवान् । यदा मम बाणेन घातितः तस्य निजस्वरूपं व्यक्तमभवत् ।

तावत् तौ आश्रमं संप्राप्तौ, किन्तु हन्त ! सर्वत्र निश्शब्दता एव ।

किन्तु सीता तत्र नासीत्। शोकाकुलः रामः आश्रमवृक्षान् पृष्टवान् ।
हे कदम्ब, तव पुष्पाणि मम प्रियायै रोचन्ते स्म। त्वया सा दृष्टा वा ? वदतु कुत्रास्ति सा?
हे अशोक, ताल, साल, विशाल, बकुल, चन्दन, कुत्रास्ति मम सीता?
अकस्मात् –
किमर्थं मत् पलायसे प्रिये? त्वं मया दृष्टा।
अलम् अनया क्रीडया, सीते। मम पीड़ा न दृश्यते? प्रत्यागच्छ प्रिये।
क्षणान्तरे –
हा एषः मम बुद्धिभ्रमः एव ! मम सीता इदनीं न जीवति।

अलं निराशया, प्रायः सीता दूरं वने अथवा नदीं गतवती स्यात् |
बहुकालम् अन्विष्यापि ताभ्यां सीता न प्राप्ता |
सीते ! वनवासानन्तर तव पितरम् अस्मिन् विषये अहं किम् वदिष्यामि?
अहं न प्रत्यागमिष्यामि | लक्ष्मण, वनवासानन्तरं मया विना त्वया अयोध्यां गन्तव्यम्|
चिन्तां त्यजतु| सीता निश्चयेन प्राप्स्यते |
हे आदित्य| त्वमेव विश्वस्य सर्वसाक्षी | मम प्रियपत्नी कुत्र अस्ति? सा मार्गभ्रष्टा वा अपहृता वा?

रामः नदीः वृक्षान् मृगान् च वारं वारम् एकमेव प्रश्नं पृच्छन् सीतान्वेषणम् अन्ववर्तत ।
सीता त्वां स्निह्यति स्म। जानासि त्वं, सा कुत्र अस्ति?
राम, सः मृगः दक्षिणदिशं प्रति पश्यति । आवां दक्षिणापथम् अनुसराव ।
मार्गे रामः भूमौ पतितानि पुष्पाणि अपश्यत् ।
लक्ष्मण, पश्य । एतानि पुष्पाणि सीतायै मया सङ्गृहीतानि । सूर्यवायुभूमिभिः मदर्थम् इमानि संरक्षितानि ।
अग्रे –
एतानि सीतायाः पादचिह्नानि । किन्तु एतानि कानि? बृहत्पादचिह्नानि!
अत्र तस्याः कानिचन आभरणानि च।

विभग्नः रथः, खण्डितं धनुः, मृतौ अश्वतरौ, सारथी अपि मारितः! किम् एतत्? सीतायाः कृते युद्धम्?
क्षणान्तरे रामः कोपाविष्टः जातः।
मम प्रिया मत् अपहृता। देवाः यदि इदानीमेव तां न प्रत्यर्पयन्ति तर्हि अहं सम्पूर्णं जगत् विनाशयामि।
यावत् रामः धनुषि बाणम् आरोपितवान् –
तिष्ठतु !
एकस्य दुष्कृत्यस्य प्रतिकारार्थं जगतः विनाशः अनुचितः। येन अपराधं कृतं तम् अन्विष्य अवश्यं दण्डयतु। किन्तु निर्दोषाः न हननीयाः।
लक्ष्मणेन एवं समाश्वसितः रामः बाणं धनुषः अपनीय अग्रे प्रस्थितवान्। तदानीम् –
सः गृध्ररूपी राक्षसः ! मम प्रियां भक्षयित्वा सः तत्र श्राम्यति । पापकृत्! अहम् त्वां मारयामि।

किन्तु आश्चर्यचकितः सः व्यरमत।
अहो! एषः जटायुः! पुनः आहतः!

हे राम, अहं रावणेन ह्रियमानां सीतां दृष्टवान्।

अहं तस्य सारथिनम् अश्वतरौ च मारितवान् ...

तस्य रथं भग्नवान्। रावणः सीतां धृत्वा भूमिम् अवतीर्णवान्।

सीतां तत्र विहाय रावणः पुनः आकाशम् आरूढवान्।
वत्से, इतः पलाय्य आत्मानं रक्ष। एतं धूर्तम् अहं युध्ये।

रावणः मां अताडयत् | मम पक्षनखौ खड्गेन छिन्नवान् च |
अधः पतितं व्रणितं मां दृष्ट्वा सीता शीघ्रं मम समीपम् आगतवती |
दीर्घं निःश्वास्य जटायुः व्यरमत्
तत्क्षणं रावणः सीतां गृहीत्वा दक्षिणदिशाम् अगच्छत् |
हे पक्षिवर्य, एषः रावणः कः?
कष्टेन श्वसन् जटायुः मन्दम् उक्तवान् ..
रावणः राक्षसेन्द्रः.. विश्रवसः.. पुत्रः..

अग्रे..अग्रे वदतु।
किन्तु जटायुः प्राणान् त्यक्तवान्।

जटायोः मृत्योः रामः शोकम् अन्वभवत्।
हे पक्षिश्रेष्ठ, पितृतुल्याय भवते नमामि।
जटायोः दाहसंस्कारं कृत्वा रामलक्ष्मणौ पुनः सीतान्वेषणाय प्रस्थितवन्तौ।

यदा ते क्रौंचवनं प्राप्तवन्तौ, तदा एकः राक्षसः तौ बलेन गृहीतवान्।
राम, एतस्मात् राक्षसात् आवयोः कथं मोक्षं भविष्यति?

यावत् राक्षसः तौ ग्रस्तुं मुखम् प्रासारयत् ...

... तावत् राजकुमारौ तस्य बाहुं छित्वा ततः धावितवन्तौ। किन्तु तावत् –

ततः राक्षसः अवदत –
हे वीरसहोदरौ, अचिरेण मां दहताम्, अहं भवद्भ्यां साहाय्यं करिष्यामि ।

तौ राक्षसम् अदहताम्। अग्नेः बहिः सुन्दररूपमेकम् उदभवत् ।
हे राम, मम नाम कबन्धः । शापकारणात् लब्धात् क्रूररूपात् अहं भवता विमुक्तः ।

वानराधिपतेः सुग्रीवस्य साहाय्यं याचताम् । सः भवत्पत्नीं प्राप्तुं साहायतां करिष्यति । सः ऋष्यमूकपर्वते वसति ।

सहोदरौ अग्रे अगच्छताम् । वृद्धसाध्वी शबरी पम्पासरोवरस्य पश्चिमतीरं प्राप्तवन्तोः रामलक्ष्मणयोः स्वागतं कृतवती ।
अन्ततः मम इच्छा तु पूरिता राम । अस्मै क्षणाय एव चिरकालं प्रतीक्षमाणा आसम् ।

भवदर्थं सङ्गृहीतानि फलानि स्वीकरोतु ।
अयं सर्वेषु फलेषु मधुरतमम् ।
अचिरेण, शबरी देहं त्यक्त्वा मुक्तिं प्राप्तवती ।

अग्रे गच्छन्तौ रामलक्ष्मणौ पम्पासरोवरम् अतिक्रम्य यदा ऋष्यमूकपर्वतं प्राप्तवन्तौ तत्र एकं परिव्राजकम् अपश्यताम् ।
भवन्तौ अत्रत्यौ न। कुतः आगतौ?
आवाम् ...
तयोः संशयं दृष्ट्वा सः अवदत् –
अलं भयेन । वानरराजः सुग्रीवः भवतोः मैत्रीम् इच्छति। अहं तस्य मन्त्री, हनुमान्।
हनुमन्, आवां सुग्रीवस्य पराक्रमं श्रुतवन्तौ। तमेव अन्विषन्तौ आवाम् अत्र आगतौ।
तदा लक्ष्मणः हनुमते रामस्य वनवासं, सीतापहरणं च विवृतवान्।
मम राजा सुग्रीवः अपि स्वराज्यात् निष्कासितः। स्वभ्रात्रा वालिना पीडितः सः वानरराज्यात् किष्किन्धातः पलायितवान्। सः भवद्भ्यां सह सन्धिं कर्तुम् इच्छति।
अनन्तरं हनुमान् स्वरूपं धृत्वा रामलक्ष्मणौ सुग्रीवं प्रति अनयत्।

.. ऋष्यमूकपर्वते सुग्रीवः वसति स्म। हनुमता रामस्य वृत्तान्तस्य कथनात् परम् –
नूनं, भाग्यशाली अहं यत् भवान् मम साहाय्यम् अन्विच्छति।
अग्निसाक्षिणि रामसुग्रीवौ मित्रे अभवताम्।
अद्य प्रभृति भवान् मम सुखदुःखसुहृद्। आवाम् एकीभवावः।
सुग्रीव, अहं भवतः राज्यस्य प्रतिलभनार्थं साहाय्यं करिष्यामि।
राम, अहं भवतः पत्न्याः प्रत्यानयने साहाय्यं करोमि, स्वर्गात् वा, पातालात् वा।
वयम् अपहृतां सीतां दृष्टवन्तः। सा वारं वारं भवतः नाम उत्क्रोषति स्म। सा स्वस्याः आभूषणानि भूमौ अक्षिपत् यानि अस्माभिः संरक्षितानि।
प्रिय मित्र, तानि शीघ्रम् आनय।

सुग्रीवः गुहायाः सीतायाः आभरणानि आनीतवान्। रामः तानि आकुलमनसा स्वीकृतवान् ।
हा सीते !
सः आभरणानि लक्ष्मणाय अदर्शयत् ।
हे लक्ष्मण, सीतायाः एतानि आभूषणानि न अभिजानीहि?
कङ्कणं कर्णकुण्डले च अहं न अभिजानामि, किन्तु प्रतिदिनपादपूजया नूपुरे अभिजानामि।

तत्पश्चात्, सुग्रीवः दुष्टसहोदरं वालिनं युद्धाय आहूतवान् । पूर्वं वालिना पराजितः सुग्रीवः इदानीं रामे विश्रब्धः पुनः धैर्येण युद्धम् अकरोत् ।

रामः वाणेन वालिनम् अमारयत् ।

रामस्य साहाय्येन सुग्रीवः किष्किन्धायाः राजा अभवत् । सुग्रीवः रामं प्रति स्वधर्मं विस्मृत्य सुखजीवनम् आचरत् । ततः हनुमान् सुग्रीवम् अस्मारयत् ।
राजन्, भवतः प्रभुत्वं रामस्य साहाय्येन लब्धम् अस्ति। ऋणम् अविस्मृत्य तस्य पत्न्याः अन्वेषणे यतताम्।

अनुतप्तः सुग्रीवः स्वधर्मपरिपालनार्थं सर्वाणां कपिनां सम्मेलनम् अकरोत् ।
वीरसैनिकाः! विविधेषु दिक्षु गत्वा सीतायाः अन्वेषणम् कुर्वन्तु ।

हनुमतः गमनात् पूर्वं रामः तस्मै अङ्गुलीयकम् अयच्छत् ।
भवान् मम दूतः इति अङ्गुलीयकदर्शनेन सीता अभिज्ञास्यति ।
किष्किन्धायुवराजः अङ्गदः चतुरः वृद्धः जाम्बवान् बलवन्तः वानराः हनुमता सह दक्षिणदिशि अगच्छन्।
बहुकालं सावधानेन तैः अन्विष्टा अपि सीता न लब्धा ।
वयं किं करवाम ?
एतत् विफलान्वेषणम् । सीतां कदाचिदपि न प्राप्स्यामः।
तान् वीक्षमानः जटायुसहोदरः सम्पातिः तैः दृष्टः ।
भवन्तः सीतां अन्विषन्ति ? सीताम् अपकृत्य समुद्रं लंघयित्वा द्वीपराज्यं लङ्कां प्रति गच्छन्तं रावणम् अहम् अपश्यम् ।

ततः हनुमानादयः सैनिकाः अग्रे प्रस्थितवन्तः। दक्षिणसागरतीरं प्राप्य ते चिन्ताकुलाः अभवन्।
इतः लंकापर्यन्तम् एषः विशालः सागरः विस्तृतः अस्ति। कथम् एषः तीर्येत?
एतद् महासागरतरणम् असाध्यम्।
कंचित् उपायं चिन्तयाम। प्रायः अस्मासु कश्चित् एतं सागरं लंघयितुं शक्तः।
कः कुर्यात्? कः अधिकतमं दूरं कूर्दितुं शक्तः?
अहं त्रिशतं योजननि कूर्दितुं शक्तः।
अहं चतुश्शतं योजनानि।
अहं पंचशतम्।
किन्तु तं सागरं लंघयितुं कस्यापि सामर्थ्यं पर्याप्तं नासीत् – केवलं हनुमतः। वृद्धः ऋक्षः जाम्बवान् तम् उपागतः।
हनुमन्! भवान् एव सागरलंघनाय समर्थः। किमर्थम् अत्र तूष्णीम् उपविशति? स्वबलं न जानाति?
* एका योजना त्रयोदशकिलोमीटरमितम् अन्तरम्।

एकदा बाल्ये फलभ्रान्तिवशात् त्वं उदयिनं सूर्यं खादितुं उदपतत्।

हनुमन्, उत्तिष्ठतु, कूर्दित्वा महासागरं तीर्त्वा स्वनियोगं साधयतु। न कोऽपि श्रेष्ठः भवतः बलवेगयोः।
अस्तु जाम्बवन्। अहं लङ्कां गच्छामि।

तदा पवनसुतः हनुमान् विशालरूपं धृत्वा....

.... आकशे कूर्दितवान्।

हनुमान् वेगेन उड्डयनं अकरोत्।
अकस्मात् एकः बृहान् पर्वतः समुद्रात् उदभवत्।
हनुमान् तं पर्वतं तुदितवान् . .
तदा तत् गिरिशृङ्गं मनुष्यरूपं अधारयत्
अहं मैनाकपर्वतः। भवतः पिता पूर्वं एकदा मम साहाय्यम् अकरोत्। अत्र किञ्चित् विश्रामं करोतु। अग्रे मार्गः दीर्घः अस्ति।
धन्यवादः। किन्तु अहं कार्यसिद्धेः पूर्वं विश्रामं न इच्छामि।
मैनाकपर्वतं क्रान्त्वा किंचिदेव अग्रे अपरः अपायः हनुमतः अभिमुखं उद्भूतः। सर्पप्रसू कोपपूर्णा सुरसा, भयङ्कररूपं धृत्वा हनुमते प्रतीक्षमाणा आसीत्।
इतः अग्रे गमनाय मम मुखे प्रवेशः आवश्यकः। मम मुखे प्रविष्टस्य मरणं निश्चितम्, ना अन्या काऽपि गतिः।
मां मुखे गृहीतुं शक्नोसि वा?
यथा हनुमान् स्वशरीरं बृहत् अकरोत् तथा सुरसा अपि स्वमुखं प्रासारयत्।

झटिति, हनुमान् स्वशरीरम् अङ्गुष्ठप्रमाणं कृत्वा तस्याः मुखं प्रविश्य पुनः अचिरात् बहिः आगच्छत् ।
तन्मध्ये काचित् बुभुक्षिता राक्षसी सिंहिकानाम उड्डयमानस्य हनुमतः छायाम् अपश्यत् ।
हा, अधुना अहं सम्यक् भोजनं कुर्याम् ।
सिंहिका छायां गृहीतुं अयतत ।
केनचित् परोक्षबलेन आकृष्टं हनुमन्तं प्रवेशयितुं राक्षसी मुखं प्रासारयत्।
किन्तु, अव्रणितः हनुमान् तस्याः शरीरं विदारयित्वा बहिः निष्क्रान्तः।

अन्ततः, सः लंकां प्राप्तवान्। रात्रौ अन्धकारे सः नगरं प्रवेष्टुं गोपुरम् उपागच्छत्, किन्तु मार्गः नगरदेवतया रुद्धः आसीत्।
मूर्ख, मयि स्थितायां कथं त्वं नगरं प्रवेष्टुं साहसं करोषि?
तुभ्यम् एतद् अलम्। कथं मां रोत्स्यसि?
यदा अहं केनचित् वानरेण जीयेय, तदा राक्षसाणाम् अजेयत्वं समाप्स्यति इति भविष्योक्तिः श्रुता। हा! तद्दिनम् आगतम्।
हनुमान् भित्तिं लंघयित्वा लंकानगरं प्रविष्टवान्।
एतस्मिन् विशाले नगरे अहं रामप्रियां कथम् अन्वेषिष्यामि?

हनुमान् प्रासादात् निर्गतवान्। सः समीपस्थम् उपवनं गत्वा उन्नततमं वृक्षम् आरोहत्।

किम् अहम् एतस्मिन् उपवने श्रीरामस्य भार्यां प्राप्स्यामि?

अशोकवाटिकायां राक्षसीभिः बद्धां सीतां हनुमान् अपश्यत् ।

तावति रावणः आगच्छत् ।

सीता मम मृदुवचनानि निराकरोति। तर्जनस्य च न कोऽपि परिणामः। तथापि कदाचित् सा मां स्वीकुर्यात् इति मम आशा।

हे सीते, किमर्थम् इदानीमपि रामम् अभिकाङ्क्षति, यः शक्त्या, पराक्रमेण, धनेन, कीर्त्या च न मम तुल्यः? यथाकालम् भवत्या राजपत्नीत्वं स्वीकरणीयम्। भवत्यः न कोऽपि अन्यः विकल्पः।

सीते, मासद्वयावकाशं ददामि। तदनन्तरमपि यदि मां न अङ्गीकरिष्यसि, तर्हि मम पाचकाः भोजनाय तव अङ्गान् खण्डयिष्यन्ति।
कुपितस्य रावणस्य निर्गमनात् परं राक्षस्यः सीतां प्रति –
किमर्थ राजानं न सन्तोषयसि ?
किमर्थं पुनः पुनः तं निराकर्तुं तव हठः?
राजानं विवोढुम् अङ्गीकरोतु।
नैव नैव। रावणेन सह विवाहात् भवद्भिः मम ग्रसनं वरम्।
इयं तु उत्तमा कल्पना। वयं इमां भक्षयाम किम्?
तर्हि रावणः सर्वाभ्यः समस्याभ्यः विमोचनं प्राप्स्यति।
सीता मृता इति वदेम।

राक्षस्यः उच्चैः चर्चां कुर्वत्यः ततः निरगच्छन्।
ते सुखिनः ये मम स्वामिनः समीपस्थाः। किं तेन सह मम मिलनं कदाचित् भविष्यति?
सीता स्वकेशतन्तुं उदग्रथ्नात्।
कोऽपि अन्यः उपायः नास्ति। एतेन तन्तुना अहं स्वप्राणान् त्यक्ष्यामि।
तावति हनुमान् सीतायाः उपरि स्थितां शाखां प्राप्तवान्।
सीता शोकविह्वला अस्ति। यदि इदानीं अहं तस्याः पुरतः स्वं अदर्शयिष्यम् , प्रायः सा माम् छद्मवेषिणं रावणम् अचिन्तयिष्यत्। प्रथमं मया सा रामकथाश्रावणेन आश्वासनीया।
हनुमान् मन्दस्वरेण रामस्य जीवनवृत्तान्तं उदितुम् आरब्धवान्।
अयोध्यायाः युवराजः रामः पितुराज्ञया स्वभ्रातापत्नीभ्यां सह वनवासम् आचरितुं निरगच्छत्।
अहो! कः एषः राक्षसदेशे मम स्वामिनः विषये वदति?

वने रावणः सीताम् अपहृतवान्। रामस्य सुहृदाः सहस्राधिकाः वानराः सीतान्वेषणार्थं प्रस्थितवन्तः। अन्ते सा मया अत्र प्राप्ता।

अहो, एषः तु वानरः।

क्षणान्तरे —
एषः विभ्रमः एव। मम मनः सर्वत्र राममेव पश्यति शृणोति च।

किन्तु हनुमान् तस्याः भयनिवारणार्थं रामकथाम् अन्ववर्तत।
अहं रामस्य दूतः हनुमान्। अत्रास्ति रामेण भवत्यै प्रेषितम् अङ्गुलीयकम्। अधुना किं भवत्याः मयि विश्वासः?

सीता उत्सुकतया तत् अङ्गुलीयक स्वीकृतवती।

किं रामः अपि मम चिन्तने आकुलः अस्ति? सः मां त्रास्यति वा? किं सः एतं कुत्सितं पुरुषं मारयिष्यति यः मां कलङ्कयितुम् इच्छति?

रामः भवत्याः त्राणार्थं एकमनसा चिन्तयन् अस्ति। किन्तु भवती कुत्र बन्धनस्था अस्ति इति अजानन् सः मां अन्वेष्टुं अप्रेषयत्।
अहं प्रतिगत्य रामं सूचनां दास्यामि। शीघ्रमेव सः भवत्याः परिरक्षणाय आगमिष्यति। अथवा भवती इच्छति चेत् अहं भवतीं रामं प्रति वहामि।
न, हनुमन्। मम मुक्तिः रामेण एव समीचीनः। मम प्रभुः रावणं संहृत्य मां इतः नयेत्। तेन एव मम मानरक्षणं भविष्यति।
सा स्ववस्त्रात् प्रच्छन्नम् आभरणं निष्कास्य हनुमन्तं अददात्।
प्रियनाथं एतत् ददातु।
दुष्टरावणात् मां रक्षयितुं रामं प्रार्थयतु।
शीघ्रमेव रावणः रामस्य शरैः मृत्युं प्राप्स्यति। तदनन्तरं भवत्याः रामेण सह योगः भविष्यति।

इदानीं शत्रोः बलं मया ज्ञातव्यम् । रावणं कथञ्चित् मिलित्वा तस्य मनः अवगच्छानि ।

राक्षसाणां अवधानं आकर्ष्टुं हनुमान् अशोकवाटिकायाः वृक्षान् उदखनत् ।

तं वानरं प्रतिगृह्णन्तु।

हनुमान् न केवलं आरक्षकान् जेतवान् अपि तु तान् अनुसरन्तीं राक्षससेनाम् ।

हनुमान् अनेकान् राक्षसयोधान् हतवान् । अन्ते रावणस्य पुत्रः पराक्रमी इन्द्रजित् स्वयं आगतः ।
आकाशे उन्नतम् उड्डयन्त हनुमन्तम् इन्द्रजितः एकोऽपि बाणः न अतुदत् ।

अन्ततः इन्द्रजित् ब्रह्मास्त्रम् आहूय तेन हनुमन्तं बद्धुं सफलः जातः।
ब्रह्मणा दत्तेन वरेण अहं सरलतया ब्रह्मास्त्रबन्धनात् पलायितुं शक्नोमि। किन्तु तथा न करोमि, यतः एषः रावणदर्शनस्य मार्गः।
एषः नीयताम्।
हनुमान् रावणसभां नीतः।
रावण, अहं हनुमान्, राज्ञः सुग्रीवस्य दूतः। इदानीम्पर्यन्तं भवान् सुकर्मफलानि भुंजानः अस्ति, किन्तु यदि भवान् सीतां रामाय न प्रत्यार्पयिष्यत् तर्हि अचिरेण कुकृत्यस्य परिणामान् अन्वभविष्यत्।
निर्लज्ज वानर! एतस्मै मृत्युदंडः अनुष्ठीयताम्।
रावणस्य पुण्यात्मभ्राता विभीषणः अवदत् –
राजन्, दूतः अवध्यः। एतस्य प्राणहरणम् अनुचितम्।
अस्तु। वानरः जीवेत्, किन्तु विकलांगः। एषः दग्धपुच्छः लंकायाम् भ्रामयताम्।
तदा राजसेवकाः हनुमतः पुच्छस्य उपरि तैलस्निग्धानि वस्त्राणि वेष्टयित्वा तद् दग्धवन्तः।

लंकाया: वीथिषु स: नीत:।

किन्तु यदा यात्रा नगरद्वारं प्राप्नोत्, स: नगरद्वारोपरि कूर्दितवान् ।

पुन: बृहद्रूपं धृत्वा छादात् छादम् कूर्दन् लंकानगर दग्धवान् ।

हनुमान् तदा सागरस्य अपरस्मिन् तीरे प्रतीक्षमानान् वानरान् प्रति उपगन्तुम् आकाशे उत्पतितवान्।

किष्किन्धायां रामः चिन्ताकुलः आसीत्।
पूर्वपश्चिमोत्तरदिशाभ्यः वानराः अन्वेषणं कृत्वा निष्फलाः प्रत्यागताः। दक्षिणदिशायां गतवन्तः अपि शुभवार्तां विना आगमिष्यन्ति वा?
पश्य! कश्चन वानरः धावन् आगच्छति। प्रायः सीतावृत्तं प्राप्तम्।
एषः दधिमुखः। सुग्रीवं नमस्कृत्य ...
स्वामिन्! मया पालितं मधुवनं, हनुमता अंगदादिभिः च नश्यमानम् अस्ति।
वानरैः वाटिकालुंठनेन एकेऽपि वृक्षे फलानि न शिष्टानि।
हनुमान् सीतां मिलितवान्| तदर्थं आनन्देन वनराः फलानि, मधु च भक्षयन्ति |

दधिमुख, मम विजयिनः वानराः मोदन्ताम्। परन्तु हनुमन्तम् आह्वयतु ।

अचिरेण –
अहो, स अत्र आगच्छति ।

हनुमान् तान् नत्वा रामस्य कर्णाभ्यां मधुरसङ्गीतमिव भासमानानि वचनानि उक्तवान् ।
देव, अहं सीतां दृष्टवान्। सा दक्षिणसमुद्रात् परं लङ्कायां बन्दिनी अस्ति। एतत् आभरणम् भवते दातुं मां विज्ञापितवती।

रामः मोहावस्थः इव तदाभरणम् अपश्यत् । ततः लक्ष्मणम् उद्दिश्य –
सीतां विना इदमाभूषणमात्रं समीक्षणात् किं दुःखतरम्?

बन्दीकृतायाः सीतायाः परिस्थितिं हनुमान् विवृतवान् ।
तां वोढुं सा मे अनुमतिं न अयच्छत् । रावणं मारयित्वा भवता एव तस्याः मानसंरक्षणम् भवेत् इति तस्याः संकल्पः।
सद्यः एव लङ्कां गच्छामि ।

रामलक्ष्मणौ सुग्रीवहनुमद्भ्यां नीतया वानरसेनया सह लंकां प्रति दीर्घयात्राम् आरब्धवन्तौ।
अन्ततः ते सर्वे दक्षिणसमुद्रतीरं प्राप्तवन्तः।
वयं अत्र शिबिरं प्रतिष्ठापयाम। वीरवानराः, अधुना एतस्य महासागरस्य तरणाय उपायं चिन्तयाम।
अचिरेण
पश्यन्तु! राक्षसाः। युद्धाय सज्जाः भवन्तु।
किन्तु राक्षसाः आक्रन्तुं न आगताः आसन्।
अहं रावणस्य अनुजः, विभीषणः। अहं सीतां रामाय प्रत्यर्पणार्थं स्वभ्रातरं प्रार्थितवान्, किन्तु सः निराकरोत्। अतः अहं रामस्य पक्षे भवितुम् इच्छामि। मां तं प्रति नयन्तु।

रामः विभीषणस्य स्वागतं कृतवान्। दीर्घसंभाषणान्तरं रावणसेनाबलस्य आगणनं विभीषणात् प्राप्तवान् |

अचिरेण सागरदेवः जलात् उद्भूतः।

रामस्य आदेशात् वानराः बहून् वृक्षान् उत्खन्य...
समुद्रतटं प्रति नीतवन्तः
नलस्य निर्देशे ते एकं बाढं सेतुं निर्मितवन्तः
रामादयः सागरं तीर्णवन्तः
तावत् लङ्कायां रावणः विवाहार्थं सीतां प्रेरयन् आसीत्।
सीते। रात्रौ मम सेना वानरान् अमारयत्। मम सेनापतिना सुप्तौ रामलक्ष्मणौ विमस्तकितौ पश्य रामस्य शिरः।
हा राम! राम !

हे रावण, माम् अपि मारयतु यथा स्वस्वामिनम् अनुसरामि।


रावणस्य निर्गमनात् परं, काचित् राक्षसी सीताम् उपागच्छत् ।
रावणः भवतीं वञ्चयितुं प्रयतत । मायया रामस्य इव शिरः कल्पितवान् । रामः लङ्कायाः बहिः तिष्ठति ।
सरामा, भवती सुहृदया ।


तावत्, रावणस्य सभायाम् -


राजा तुल्येन बलवत्तरेण च सह मैत्रीभावेन व्यवहरेत्। सीतां रामाय प्रतिपद्य तस्य सख्यं प्रार्थयतु।



किं? रामः मम तुल्यः? निर्बलोऽयं वानराणां साहाय्येन युद्धं करोति! रामः सागरं तीर्त्वा लङ्कां प्राप्तोऽपि इतः सजीवं न प्रतिगमिष्यति ।


लङ्कायाः प्रतिरक्षां दृढीकृत्य सुवेलपर्वतस्योपरि तिष्ठन्तीं रामस्य सेनां सर्वेक्षितुं दुर्गम् आरूढवान् ।
पश्य, रावणः तत्र।

झटिति सुग्रीवः सुवेलपर्वतशिखरात् कूर्दित्वा...
...ततः अवतीर्य...
...रावणस्य मुकुटं गृहीत्वा क्षिप्तवान्।
ततः सः रामस्य समीपम् प्रत्यागतः।
उत्तमम्!
अनन्तरं, रामेण दूतनियुक्तः राजकुमारः अंगदः रावणसभां प्रेषितः।
अधुनापि भवान् विनाशात् आत्मानं रक्षितुं शक्नोति, त्वरया सीतां रामाय प्रत्यर्पयतु, क्षमां याचतु च, अन्यथा रामः निश्चयेन भवन्तम् मारयिष्यति।
निर्लज्ज वानर! एतं गृहीत्वा मारयन्तु।
किन्तु अंगदः सरलतया ततः पलायितवान्।
युद्धम् आरब्धम्।

वानराः दुर्गस्य प्राकारम् आरूढवन्तः।
तत्र स्थितान् राक्षसान् अपनीय...
तैः सह आदिनम् भीषणेन अयुध्यन्त।
अस्ते सूर्ये वर्धितोर्जाः राक्षसाः बलेन संग्रामं कृतवन्तः। रामलक्ष्मणौ इन्द्रजिता नीतां राक्षससेनां विरुद्धवन्तौ।
इन्द्रजित् अदृश्यः भूत्वा रामलक्ष्मणयोः उपरि बाणवर्षां कृतवान्। तौ मूर्छितौ भूमौ अपतताम्।
रामः मृतः।

क्षणान्तरे रामः चेतनां प्राप्तवान्। अचेतनं व्रणितं लक्ष्मणम् दृष्ट्वा रामः तस्य शिरः स्वांके स्थापितवान्।
विष्णुवाहनः गरुडः लक्ष्मणं पक्षेन स्पृष्टवान्।
गरुडपक्षस्पर्शेन लक्ष्मणः अव्रणितः भूत्वा संज्ञां प्राप्तवान्।
इन्द्रजित् भवन्तौ प्रति शररूपान् विषसर्पान् प्रक्षिप्तवान्। राक्षसान् सावधानेन युध्यन्ताम्। ते वंचकयोद्धाः।
गरुडः समुत्पततितवान्। रामलक्ष्मणौ वानराः च राक्षसविरुद्धं युद्धं पुनरारब्धवन्तः।
रावणस्य प्रबलयोधाः धूम्राक्षप्रहस्तादयः सैनिकाः मरणं प्राप्तवन्तः।

ततः रावणः स्वयं युद्धभूमिं प्रविष्टवान् ।

रामः हनुमतः बाहू आरुह्य रावणस्य रथं छित्तवान्, सारथिम् अश्वान् च मारितवान्।

रामबाणवर्षणेन रावणः धनुकिरीटविहीनः अभवत् ।
अहं अधुना त्वां श्रान्तं निरायुध न मारयामि। त्वम् इतः प्रतिगच्छ।

रावणः तूष्णीम् स्थितः। अपमानितः सः स्वराजभवनं प्रति प्रस्थितवान्।

रावणः सचिवान् आहूतवान्।
कुम्भकर्णे अस्माकम् अन्तिमा आशा। तं जागरयन्तु।
विशालकायः कुम्भकर्णः षड्मासेभ्यः यावत् स्वपिति स्म। तं जागरयितुं दुन्दुभिबकुरशंखवादनेन महान् कोलाकहलः प्रवृत्तः।
तस्य उपरि हस्तिनः अपि चालिताः।

अन्ततः राक्षसः उत्थितवान्। रावणेन आज्ञापितः सः युद्धभूमिं प्रविष्टवान्। तं मारयितुं वानराः अनेकान् वृक्षान् शिलाः च क्षिप्तवन्तः, परन्तु तत्प्रयत्ने विफलाः अभवन्।
अन्ते रामस्य बाणेन सः मृतः ।
सुग्रीवस्य आदेशात् वानराः लङ्कां प्रविश्य नगरीं दग्धवन्तः ।
वानराणां आक्रमणे राक्षसाः प्रायः पराजिताः जाताः परन्तु तत्क्षणे इन्द्रजित् आगतः ।
हा! सा सीता खलु?

यदि अग्रे आगमिष्यथ तर्हि अहं युष्मान् पुरतः सीतां मारयिष्यामि। सा एव युद्धस्य कारणं।

मायिकां सीतां प्रहरन्तम् इन्द्रजितं दृष्ट्वा प्रमथिताः वानराः युद्धभूमेः पलायितवन्तः।
सद्यः कश्चित् अवकाशः जातः। वानरप्रत्यागमनात् पूर्वमेव अहम् एकं यागं कृत्वा अजयः भवेयम्।

वानरेभ्यः सन्देशं श्रुत्वा रामः मूर्छां प्राप्तवान्। विभीषणः रामं आश्वासितवान्।
राम, कृपया मम वचनं शृणोतु। या इन्द्रजिता मारिता सा सीता नास्ति। इन्द्रजितः कूटयुद्धरीति अहं जानामि। निश्चयेन सा इन्द्रजितः मायारचना, या वानरैः मारिता दृष्टा।

इतः परं सः अजेयत्वाय एकं महायज्ञं कुर्यात्। ततः पूर्वमेव तं मारयतु।
लक्ष्मणः एतत् कार्यं कुर्यात्।

लक्ष्मणस्य आगमनेन यज्ञे विघ्नः जातः। ततः लक्ष्मणं योद्धुम् इन्द्रजित् उत्थितवान्।
किन्तु शीघ्रमेव लक्ष्मणस्य बाणेन सः मारितः।
पुत्रस्य मरणात् उद्विग्नः रुष्टश्च रावणः युद्धभूमिं प्रविष्टवान्।
कुलद्रोहिन् विभीषण, अधुना तव मरणं निश्चितम् ।
विभीषणस्य प्राणान् हर्तुं बाणं लक्षितवान्।
किन्तु लक्ष्यप्राप्तिपूर्वमेव लक्ष्मणस्य बाणेन रावणस्य शरः खण्डितः।
क्रुद्धः रावणः पुनः शरम् आलक्ष्य लक्ष्मणस्य वक्षः छित्तवान् ।

वीरवानराः, मम भ्रातरं संरक्षन्तु। एतं घोरराक्षसम् अहं योत्स्यामि। अद्य आवयोः एकः निश्चयेन मरिष्यति।
किन्तु रामेण बाणवर्षायां सत्याम् रावणः ततः पलायितवान्।
युद्धे किंचित् स्थगिते आकुलः रामः लक्ष्मणस्य समीपम् आगतः।
लक्ष्मण, किमर्थं न उत्तिष्ठसि? अक्षिणी उन्मीलयतु।
तदा रामेण पार्श्वस्थस्य सान्त्वयतः सुषेणस्य वाणी श्रुता, यया तस्य मनः आश्वस्तं जातम्।
लक्ष्मणः अचेतः एव अस्ति, न मृतः। चिन्तां त्यजतु। एनम् उज्जीवयितुं दूरस्थात् महोदयपर्वतात् संजीवनौषधिः आवश्यकी।
निराशा अपगता, हर्षः जातः।
प्रियहनुमन् त्वरया गच्छतु, संजीवनौषधिम् आनयतु।

हनुमान् हिमालयस्य समीपस्थं महोदयगिरिं प्राप्तवान्।
एतासु का संजीवनी ओषधिः? इमाः, ताः वा?
संजीवनौषधिं न अभिजानामि। समग्रं पर्वतं सुषेणं प्रति वहामि। सः एव चिनुयात्।
अतः हनुमान् समस्तं पर्वतम् उन्नीय भरतखंडं तीर्त्वा लंकां प्रति ऊढवान्।
लंकायाम् –
पश्यत! हनुमान् समस्तं पर्वतम् आनीतवान्।
हनुमान् सर्वदा कष्टात् त्रायते।

निर्व्यग्रः सुषेणः इष्टां ओषधिं प्राप्तवान्। तां चूर्णयित्वा लक्ष्मणस्य नासिकासमीपे धृतवान्।
अचिरेण लक्ष्मणः चेतनां प्राप्तवान्।
धन्यं। त्वं कुशलः असि।
हनुमान् पर्वतं पूर्वस्थाने प्रापय्य रामस्य समीपं आगतवान्।
क्षणान्तरे सिंहनादं सर्वेषां हृदयानि व्यदारयत्। रावणः युद्धाय आगतः।
रामः इन्द्रेण प्रेषितं रथं आरूढवान्।
चोरः इव एकाकिनीं विहस्तां सीतां त्वं अपहृतवान्। मयि सति त्वं कदापि न एतत् कुसाहसं कुर्याः।

रामरावणयोः मध्ये घोरं युद्धं जातम्।
किञ्चित्कालं आयुधघट्टनकोलाहलं एव श्रुतं न कोऽपि अन्यः ध्वनिः। अन्धकारे बाणसंपातेन जनितः प्रकाशः एव दृष्टः।
अन्ते रामः आदित्यं प्रार्थ्य ब्रह्मास्त्रं रावणस्य दिशि लक्ष्यं कृतवान्।
.. मृतः रावणः भूमौ अपतत्।
*अगस्त्येन ऋषिणा उपदिष्टा प्रार्थना

एतत् श्रुत्वा सीता प्रमथिता जाता।

नूनम्, अहं रावणस्य बन्दिनी आसम्। किन्तु मनः सर्वदा एकेन एव पुरुषेण व्याप्तम् आसीत् – रामेण। इदानीं भवता कलुषितमतायाः मम न कोऽपि जीवनहेतुः। लक्ष्मणः चितां रचेत्। अहं अग्नेः शरणं गच्छामि।

हे अग्ने, लोकस्य पुरतः स्वशीलतायाः घोषणं कर्तुम् न इच्छामि। किन्तु रामस्य विश्वासार्थम् अहं निर्दोषा इति दर्शयतु।
अग्निः तस्याः प्रार्थनां श्रुत्वा प्रत्यक्षः अभवत्। सीता लेशमात्रस्य दहनं विना अग्निपरीक्षायां उत्तीर्णवती।
हे राम। सीतां स्वीकरोतु। सा निरपराधा, निर्मला च।
मां क्षम्यताम्। त्वं निर्दोषा इति अहं अजानाम्। किन्तु राजपत्नी शंकया निर्लिप्ता भवेत्। तत्कारणात् एव अग्निपरीक्षा आवश्यकी आसीत्।
रामलक्ष्मणसीताः विभीषणेन प्रदत्ते पुष्पकविमाने अयोध्यां प्रति निर्गतवन्तः।
अयोध्यानगरद्वारे भरतः सहर्षं तेषां स्वागतं कृतवान् ।

अयोध्यानगरे हर्षोल्लसेन रामस्य पट्टाभिषेकं अभवत्।
रामः राज्यं निपुणतया धर्ममर्गेण शासितवान्। राज्ये जनाः श्रद्धया रामदृष्टान्तं स्वधर्मं आचरन्। सर्वश्रिये रामराज्ये सर्वे सुखिनाः आसन्।